# ॥ फणीन्द्रक्ष्माभृत्स्तोत्रम् ॥

अस्ति श्रीमानवनितिलको वेङ्कटो नाम शैलो
भूयानेको भुवि परिणतः पुण्यराशिः प्रजानाम् ।
सारोद्धारस्सकलजगतां स्थापितः क्वापि धात्रा
यस्मिन् साक्षात्परमपुरुषो दीव्यति श्रीसहायः ॥ १॥

सौवर्णात्मा मरतकमयैर्वज्रवैडूर्यरूपैः
नीलोत्की ?र्णैः? स्फटिकघटितैः पद्मरागप्रणीतैः ।
नानारत्नाकृतिभिरखिलैस्सानुभिस्सम्भृतश्रीः
सर्वैस्सोऽयं सुरगिरिरिति प्रत्यभिज्ञायते यः ॥ २॥

उर्वी ?गुर्वी? मुदधिवसनामुद्वहन् भूललग्नाम्
उत्तुङ्गाग्रैरुपरिशिखरैरुल्लिखन्नूर्ध्वसीमाम् ।
तिर्यग्दिव्याकृतिमहिमतश्छादयन् यो दिगन्तान्
विष्णुस्साक्षाद ?यमिति? जनैस्तर्क्यते भूवराहः ॥ ३॥

मन्दस्पन्दानिलविवलितातात्म्रबालप्रवाल-
स्वैरास्वादप्रमदविहरत्कोकिलालापगर्भैः ।
सान्द्रच्छायैस्सरसकुसुमैस्सौरभाकृष्टभृङ्गैः
सर्वैर्वृक्षैस्सततफलितैर्यः सदा सम्भृतश्रीः ॥ ४॥

स्वैः पाद्यार्घ्यप्रभृति ददतः स्यन्दमानैर्मरन्दैः
भव्यामोदैः पवनगलितैरर्चयन्तः प्रसूनैः ।
वृन्तोद्वान्तैः परिणतफलैर्नित्यक्लृप्तोपहाराः
धन्या वृक्षा ?यदुपरि? रमावा समाराधयन्ति ॥ ५॥

पुण्यामोदप्रसवलहरीवासिताशावकाशैः
दूरेदूरे दुरितशमनैः पश्यतां प्राणभाजाम् ।
श्रीमन्नारायणवरशिरोभूषणीभाव ?भव्यैः?
स्निग्धैः कृष्णैस्तरुणतुलसीकाननैः पावनो यः ॥ ६॥

नित्याशुष्यत्सलिलसरसीस्यन्दसन्धुक्षितानां
श्रावंश्रावं श्रवणसुभगं निस्वनं निर्झराणाम् ।
?धत्ते? धाराधररवधिया नृत्यतो नीलकण्ठान्
केकाकण्ठान्निजसहचरीनित्यनेत्रोत्सवान् यः ॥ ७॥

दंशं दंशं कुशनवदलैर्दर्भदूर्वाप्रवालान्

खादङ्खादं पृथुमृदुफलं भूरुहां भूविकीर्णम् ।
पायम्पायं यदुपरि पयः पावनं दिर्घिकाणां
मादम्मादं विहरति मृगीयूथपः कृष्णासारः ॥ ८॥

घो ?धी? राः सिंहाः कुपितशरभाः कुञ्जरेन्द्रा मदान्धाः
घोरा व्याघ्रा कटुअककिटयो भीमभल्लूकसङ्घाः ।
सर्वे चान्ये सहजरिपवो जन्तवो यत्रवा ?साः?
?सं? गाहन्ते प्रशमितरुषः स्वैरमेकोदपाने ॥ ९॥

श्रीमद्वादिप्रवरभयकृद्देशिकोक्तं फणिन्द्र-
क्ष्माभृत्स्तोत्रं भुवनमहितं शब्दतोऽर्थाच्च साधु ।
शृत्वा प्री ?ता भव? तु जनता काव्यनाट्यादिदक्षाः
नैतत्तुल्यं भवति भवति स्मापि यावद्धारित्र्याम् ॥ १०॥

इति फणीन्द्रक्ष्माभृत्स्तोत्रम् ।